ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया ।।'

अत्र भगवतः श्यामा कान्तिः सहजा ।

'सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि ।

कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम् ।।'

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः ।

**सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ।। ८९ ।।**

यथा— 'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।

अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ।।'

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्, इह तूभयोस्तुल्यगुणतया भेदाग्रहः ।

**तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ।**

यथा — 'जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।

नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ।।'

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम्, इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयते इति भेदः ।

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ।। ९० ।।**

यथा — 'हन्त ! सान्द्रेण रागेण भृतेऽपि हृदये मम ।

गुणगौर ! निषण्णोऽपि कथं नाम न रज्यसि ।।'

यथा वा —

'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।

राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ।।'

पूर्वत्रातिरक्तहृदयसंपर्कात् प्राप्तवदपि गुणगौरशब्दवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम्, उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः संपर्केऽपि न तद्रूपता । अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रया-द्विशेषोक्तेर्भेदः, वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**

**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ।। ९१ ।।**

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः । अत्राकारेण यथा —

'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।

पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख ।।'

अत्र कयाचित्कुङ्कुमभेदेन संलक्षितं कस्याश्चित्पुरुषायितं पाणौ पुरुषचिन्हखड्ग-लेखालिखनेन सूचितम् । इङ्गितेन यथा —

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।

हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ।।

अत्र विटस्य भ्रूविक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनि-मीलनेन प्रकाशितः ।

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ।**

यथा —

'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-

द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।

आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं

शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ।।'

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात् । द्वितीयापह्नुतेर्भेदश्च तत्प्रस्तावे दर्शितः ।

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।। ९२ ।।**

दुरूहयोः कविमात्रवेद्ययोः अर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः । यथा मम —

‘लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण ।
स्फूर्जद्धुङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः ।।’

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।**
**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ।। ९३ ।।**

यथा —

‘मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ।।’

यथा वा —

‘आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ।।’

न चायं प्रसादाख्यो गुणः भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात् । न चाद्भुतो रसः, विस्मयं प्रत्यस्य हेतुत्वात् । न चातिशयोक्तिरलङ्कारः, अध्यवसायाभावात् । न च भ्रान्तिमान्, भूतभाविनोर्भूतभावितयैव प्रकाशनात् ।

न च स्वभावोक्तिः, तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम्; अस्य तु वस्तुनः प्रत्यक्षायमाणस्वरूपो विच्छित्तिविशेषोऽस्तीति ।

यदि पुनर्वस्तुनः क्वचित्स्वभावोक्तावप्यस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः ।

'अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः ।

अचामरोऽप्येष सदैव वीच्यते विलासबालव्यजनेन कोऽप्ययम् ।।'

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः, वर्णनावशेन प्रत्यक्षायमाणत्वस्यैव स्वरूपत्वात् ।

यत्पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः, यथोदाहृते 'आसीदञ्जनम्'— इत्यादौ ।

**लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते ।**

**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ।। ९४ ।।**

क्रमेणोदाहरणम् —

'अधःकृताम्भोधरमण्डलानां यस्या शशाङ्कोपलकुट्टिमानाम् ।

ज्योत्स्नानिपातात्क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ।।'

'नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।

अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते' ।।

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।**

**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ।। ९५ ।।**

**रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।**

तदाभासौ रसाभासो भावाभासश्च । तत्र रसयोगाद्रसवदलङ्कारो यथा — 'अयं स रसनोत्कर्षी—' इत्यादि । अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रिय-त्वात्प्रेयः । यथा मम —

'आमीलितालसविवर्तिततारकाक्षीं

मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।

प्रस्वेदवारिकणिकाचितगण्डबिम्बां

संस्मृत्य तामनिशमेति न शान्तिमन्तः ।।'

अत्र संभोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य । ऊर्जो बलम्, अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा —

'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।

त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ।।'

अत्र शृङ्गाराभासो राजविषयकरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परिहारः ।

यथा — 'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।

ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ।।'

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।

**भावस्य चोदये संधौ मिश्रत्वे च तदाख्यकाः ।। ९६ ।।**

तदाख्यका भावोदयभावसंधिभावशबलनामानोऽलङ्काराः । क्रमेणोदाहरणम् —

'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।

श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ।।

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् ।

‘जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ।।

अत्रौत्सुक्यलज्जयोश्च संधिर्देवताविषयरतिभावस्याङ्गम् ।

‘पश्येत्कश्चिच्चल चपल ! रे ! का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्याददानाभिधत्ते ।।’

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् । इह केचिदाहुः — ‘वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः, रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलङ्कारता भवितुं युक्ता’ इति । अन्ये तु — ‘रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याङ्गीकार्य एव’ इति । अपरे च — ‘रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यतो रूपकादौ तु वाच्याद्युपधानम्, अजागलस्तनन्यायेन’ इति ।

अभियुक्तास्तु — ‘स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतैः रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते । समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालङ्कृतिता, न त्वास्वादस्य, तस्योक्तरीतिविरहात्’ इति मन्यन्ते । अत एव ध्वनिकारेणोक्तम् —

‘प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ।।’

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत । एवं च यच्च कैश्चिदुक्तम्— 'रसादीनामङ्गित्वे रसवदाद्यलङ्कारः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः' इति तदपि परास्तम् ।

**यद्येत एवालङ्काराः परस्परविमिश्रिताः ।**

**तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा ।। ९७ ।।**

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक्चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ ।

तत्र —

**'मिथोऽनपेक्षमेतेषां स्थितिः संसृष्टिरुच्यते ।**

एतेषां शब्दार्थालङ्काराणाम् । यथा —

'देवः पायादपायान्नः स्मेरेन्दीवरलोचनः ।

संसारध्वान्तविध्वंसहंसः कंसनिसूदनः ।।'

अत्र पायादपायादिति यमकम्, संसारेत्यादौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः । द्वितीये पादे उपमा, द्वितीयार्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः । एवमुभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः ।

**अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।**

**संदिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ।। ९८ ।।**

अङ्गाङ्गिभावो यथा —

'आकृष्टिवेगविगलद्भुजगेन्द्रभोग-

निर्मोकपट्टपरिवेष्टनयाम्बुराशेः ।

मन्थव्यथाव्युपशमार्थमिवाशु यस्य

मन्दाकिनी चिरमवेष्टत पादमूले ।।'

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः । सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम् । श्लेषञ्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्, अतिशयोक्तिश्च 'मन्थव्यथाव्युपशमार्थमिव' इत्युत्प्रेक्षाया अङ्गम् । उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम् । यथा वा —

'अनुरागवती संध्या दिवसस्तत्पुरःसरः ।

अहो ! दैवगतिश्चित्रा तथापि न समागमः ।।'

अत्र समासोक्तिविशेषोक्तेरङ्गम् । संदेहसङ्करो यथा —

'इदमाभाति गगने भिन्दानं सन्ततं तमः ।

अमन्दनयनानन्दकरं मण्डलमैन्दवम् ।।'

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्, अथवा इदमिति मुखस्य । चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसंबन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकम्, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात्समासोक्तिः, यद्वाप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्यायोक्तिरिति बहूनामलङ्काराणां संदेहात्संदेहसङ्करः ।

यथा वा — 'मुखचन्द्रं पश्यामि' इत्यत्र किं मुखं चन्द्र इव इत्युपमा ? उत चन्द्र एवेति रूपकमिति संदेहः । साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे न पुनः संदेहः । यथा —

'मुखचन्द्रं चुम्बति' इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम् । चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् । 'मुखचन्द्रः प्रकाशते' इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन संभवतीति नोपमाबाधकः ।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ।'

अत्र योषित आलिङ्गनं नायकस्य सादृश्ये नोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसंभवादुपमाबाधकम्, नारायणे संभवाद्रूपकम् । एवम् —

'वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम् ।'

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासंभवाद्रूपकस्य बाधकता । एवं— 'सुन्दरं वदनाम्बुजम्' इत्यादौ साधारणधर्मप्रयोगे 'उपमितं व्याघ्रादिभिः सामान्यप्रयोगे' इति वचनादुपमासमासो न संभवतीत्युपमाया बाधकः । एवं चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव । एकाश्रयानुप्रवेशो यथा मम —

'कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः ।
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः
परीरम्भारम्भः क इव भविताम्भोरुहदृशः ।।'

अत्र कटाक्षेणापीषत्क्षणमपीत्यत्र च्छेकानुप्रासस्य निरीक्षेतेत्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः । एवं चात्रैवानुप्रासार्थापत्त्यलङ्कारयोः ।

यथा वा —

'संसारध्वान्तविध्वंस-' इत्यत्र रूपकानुप्रासयोः ।

यथा वा — 'कुरबकारवकारणतां ययुः' इत्यत्र रबका रवका इत्येकं बकारवकार इत्येकमिति यमकयोः ।

यथा वा —

‘अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु ।

महइ पसारिअगीआणं णच्चिजं मोरविन्दाणम् ।।’

(अभिनवपयोदरसितेषु पथिकसामाजिकेषु दिवसेषु ।

महति प्रसारितगीतानां नर्त्तितकं मयूरवृन्दानाम् । इति संस्कृतम् ।)

अत्र ‘पहिअसोमाइएसु’ इत्येकाश्रये पथिकश्यामायितेत्युपमा, पथिकसामाजिकेष्विति रूपकं प्रविष्टमिति ।

**श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-**

**श्रीविश्वनाथकविराजकृतं प्रबन्धम् ।**

**साहित्यदर्पणममुं सुधियो विलोक्य**

**साहित्यतत्त्वमखिलं सुखमेव वित्त ।। ९९ ।।**

**यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्गमलङ्करोति ।**

**तावन्मनः संमदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ।। १०० ।।**

इत्यालङ्कारिकचक्रवर्तिसान्धिविग्रहिकमहापात्रश्रीविश्वनाथकविराजकृते

साहित्यदर्पणे दशमः परिच्छेदः ।

# साहित्यदर्पणकारिकावली

## प्रथमः परिच्छेदः

शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ।

अपहृत्य तमः सन्ततमर्थानखिलान्प्रकाशयतु ।। १ ।।

चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।

काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ।। २ ।।

वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः।

उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ।। ३।।

## द्वितीयः परिच्छेदः

वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः।

वाक्योच्चयो महावाक्यमित्थं वाक्यं द्विधा मतम् ।। १ ।।

वर्णाःपदं प्रयोगार्हानन्वितैकार्थबोधकाः।

अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः ।। २ ।।

वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।

व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ।।३।।

तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा ।

सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ।। ४ ।।

मुख्यार्थवाधे तद्युक्तो ययान्योऽर्थः प्रतीयते ।

रूढेः प्रयोजनाद्वाऽसौ लक्षणा शक्तिरर्पिता ।। ५।।

मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।

स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ।। ६ ।।

अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।

उपलक्षणहेतुत्वादेषा लक्षणलक्षणा ।। ७ ।।

आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा।

विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ।। ८ ।।

सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका ।

सादृश्येतरसंबन्धाः शुद्धास्ताः सकला अपि ।

सादृश्यात्तु मता गौण्यस्तेन षोडशभेदिताः ।। ९ ।।

व्यङ्ग्यस्य गूढागूढत्वाद् द्विधा स्युः फललक्षणाः ।। १० ।।

धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा।

तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ।। ११ ।।

पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा।

विरतास्वभिधाद्यासु ययाऽर्थो बोध्यते परः।। १२ ।।

सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ।

अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ।। १३ ।।

अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते।

एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साऽभिधाश्रया ।। १४ ।।

लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।

यया प्रत्याय्यते सा स्याद्व्यञ्जना लक्षणाश्रया।। १५ ।।

वक्तृबोद्धव्यवाक्यानामन्यसंनिधिवाच्ययोः।

प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ।। १६ ।।

त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ।। १७ ।।

शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।

एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ।। १८ ।।

अभिधादित्रयोपाधिवैशिष्ट्यात् त्रिविधो मतः ।

शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ।। १९ ।।

तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने ।

तात्पर्यार्थं तदर्थं च वाक्यं तद्बोधकं परे ।। २० ।।

## तृतीयः परिच्छेदः

विभावेनानुभावेन व्यक्तः संचारिणा तथा ।

रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ।। १ ।।

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।

वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।। २।।

लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।

स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।। ३।।

करुणादावपि रसे जायते यत्परं सुखम्।

सचेतसामनुभवः प्रमाणं तत्र केवलम्।। ४ ।।

किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः।

तथा रामायणादीनां भविता दुःखहेतुता ।। ५ ।।

हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्।

शोकहर्षादयो लोके जायन्तां नाम लौकिकाः।। ६ ।।

अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।

सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः।। ७ ।।

अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः।

न जायते तदास्वादो विना रत्यादिवासनाम्।। ८ ।।

व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः।

तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ।। ९ ।।

प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।

उत्साहादिसमुद्बोधः साधारण्याभिमानतः।। १० ।।

नृणामपि समुद्रादिलङ्घनादौ न दुष्यति।

साधारण्येन रत्यादिरपि तद्वत्प्रतीयते ।। ११ ।।

परस्य न परस्येति ममेति न ममेति च ।

तदास्वादे विभावादेः परिच्छेदो न विद्यते ।। १२ ।।

विभावनादिव्यापारमलौकिकमुपेयुषाम् ।

अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ।। १३ ।।

कारण-कार्य-सञ्चारिरूपा अपि हि लोकतः ।

रसोद्बोधे विभावाद्याः कारणान्येव ते मताः ।। १४ ।।

प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ।

ततः सम्बलितः सर्वा विभावादिः सचेतसाम् ।। १५ ।।

प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ।

सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ।। १६ ।।

झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ।

पारिमित्याल्लौकिकत्वात्सान्तरायतया तथा ।। १७ ।।

अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत्।

शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम्।। १८ ।।

दर्शयन्नर्त्तको नैव रसस्यास्वादको भवेत्।

काव्यार्थभावनेनायमपि सभ्यपदास्पदम्।। १९ ।।

नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः।

यस्मादेष विभावादिसमूहालम्बनात्मकः ।। २० ।।

तस्मान्न कार्यो नो नित्यः पूर्वसंवेदनोज्झितः ।

असंवेदनकाले हि न भावोऽप्यस्य विद्यते ।। २१ ।।

नापि  भविष्यन् साक्षादानन्दमयस्वप्रकाशरूपत्वात्।

कार्यज्ञाप्यविलक्षणभावान्नो वर्त्तमानोऽपि ।। २२ ।।

विभावादिपरामर्शविषयत्वात् सचेतसाम्।

परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम् ।। २३ ।।

न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते।

तथाऽभिलापसंसर्गयोग्यत्वविरहान्न च ।। २४ ।।

सविकल्पकसंवेद्यः साक्षात्कारतया न च ।

परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसंभवात्।। २५ ।।

तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम्।

प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ।। २६ ।।

निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः।

अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ।। २७ ।।

रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत्।

अतोऽस्य स्वप्रकाशत्वमखण्डत्वं च सिध्यति।। २८ ।।

रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः।

आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ।

आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्।। २९ ।।

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।

दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता।। ३० ।।

धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च ।

धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः ।। ३१ ।।

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।

स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः।। ३२।।

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।

आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ।। ३३।।

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।

सामान्यगुणैर्भूयान् द्विजादिको धीरप्रशान्तः स्यात् ।। ३४ ।।

एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा।

एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः ।। ३५ ।।

कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।

दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः।। ३६ ।।

अनुकूल एकनिरतः शठोऽयमेकत्र बद्धभावो यः ।

दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ।। ३७ ।।

एषां च त्रैविध्यादुत्तममध्याधमत्वेन।

उक्ता नायकभेदाश्चत्वारिंशत्ताथाष्टौ च ।। ३८।।

दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिकेतिवृत्ते तु ।

किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः ।। ३९।।

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।

भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ।। ४० ।।

संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः।

वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्।। ४१ ।।

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।

हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः ।। ४२ ।।

मन्त्री स्यादर्थानां चिन्तायां तद्वदवरोधे ।

वामनषण्डकिरातम्लेच्छाभीराः शकारकुब्जाद्याः।। ४३ ।।

मदमूर्खताभिमानी दुष्कुलतैश्वर्यसंयुक्तः।

सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः।। ४४ ।।

दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ।

ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे ।। ४५ ।।

उत्तमाः पीठमर्दाद्याः मध्यौ विटविदूषकौ ।

तथा शकारचेटाद्या अधमाः परिकीर्तिताः ।। ४६ ।।

निसृष्टार्थो मितार्थश्च तथा संदेशहारकः ।

कार्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः ।। ४७ ।।

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।

सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ।। ४८ ।।

मितार्थभाषी कार्यस्य सिद्धकारी मितार्थकः ।

यावद्भाषितसंदेशहारः संदेशहारकः ।। ४९ ।।

शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी ।

ललितौदार्यमित्यष्टौ  सत्त्वजाः पौरुषा गुणाः ।। ५० ।।

शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।

नीचे घृणाधिके स्पर्धा यतः शोभेति तां विदुः ।। ५१ ।।

धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ।

संक्षोभेष्वप्यनुद्वेगो माधुर्यं परिकीर्तितम् ।। ५२ ।।

भीशोकक्रोधहर्षाद्यैर्गाम्भीर्यं निर्विकारता ।

व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ।। ५३ ।।

अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।

प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ।। ५४ ।।

वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।

दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ।। ५५ ।।

अथ नायिका त्रिभेदा स्वान्या साधारणा स्त्रीति ।

नायकसामान्यगुणैर्भवति यथासंभवैर्युक्ता ।। ५६ ।।

विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।

साऽपि कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति ।। ५७ ।।

प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।

कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ।। ५८ ।।

मध्या विचित्रसुरता प्ररूढस्मरयौवना ।

ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ।। ५९ ।।

स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।

भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ।। ६० ।।

ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ।

प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ।। ६१ ।।

धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ।

प्रगल्भा यदि धीरा स्वाच्छन्नकोपाकृतिस्तदा ।। ६२ ।।

उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः ।

धीराधीरा तु सोल्लुण्ठभाषितैः खेदयत्यमुम् ।। ६३ ।।

तर्जयेत्ताडयेदन्या प्रत्येकं ता अपि द्विधा।

कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ।। ६४ ।।

मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश कीर्तिताः।

मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश।। ६५ ।।

परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।

यात्रादिनिरतान्योढा कुलटा गलितत्रपा।। ६६ ।।

कन्या त्वजातोपयमा सलज्जा नवयौवना ।

धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ।। ६७ ।।

निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि ।

वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ।। ६८ ।।

काममङ्गीकृतमपि परिक्षीणधनं नरम् ।

मात्रा निःसारयेदेषा पुनःसंधानकाङ्क्षया ।। ६९ ।।

तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा ।

लिङ्गिनश्छन्नकामाद्या अस्याः प्रायेण वल्लभाः ।। ७० ।।

एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।

रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ।। ७१ ।।

अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ।

स्वाधीनभर्तृका तद्वत्खण्डिताथाभिसारिका ।। ७२ ।।

कलहान्तरिता  विप्रलब्धा प्रोषितभर्तृका ।

अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ।। ७३ ।।

कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।

विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ।। ७४ ।।

पार्श्वमेति प्रियो यस्या अन्यसंयोगचिह्नितः ।

सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ।। ७५ ।।

अभिसारयते कान्तं या मन्मथवशंवदा ।

स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका ।। ७६ ।।

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।

अवगुण्ठनसंवीता कुलजाभिसरेद्यति ।। ७७ ।।

विचित्रोज्ज्वलवेषा तु रणन्नूपुरकङ्कणा ।

प्रमोदस्मेरवदना स्याद्वेश्याभिसरेद्यदि ।। ७८ ।।

मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।

आविद्धगतिसंचारा स्यात्प्रेष्याभिसरेद्यदि ।। ७९ ।।

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम् ।

मालापञ्चः श्मशानं च नद्यादीनां तटी तथा ।। ८० ।।

एवं कृताभिसाराणां पुंश्चलीनां विनोदने ।

स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रये ।। ८१ ।।

चाटुकारमपि प्राणनाथं रोषादपास्य या ।

पश्चात्तापमवाप्नोति कलहान्तरिता तु सा ।। ८२ ।।

प्रियः कृत्वापि संकेतं यस्या नायाति संनिधिम् ।

विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता ।। ८३ ।।

नानाकार्यवशाद्यस्या दूरदेशं गतः पतिः ।

सा मनोभवदुःखार्ता भवेत्प्रोषितभर्तृका ।। ८४ ।।

कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।

सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ।। ८५ ।।

आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।

तदनागमदुःखार्ता विरहोत्कण्ठिता तु सा ।। ८६ ।।

इति साष्टाविंशतिशतमुत्तममध्याधमस्वरूपेण ।

चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदाः ।। ८७ ।।

क्वचिदन्योन्यसाङ्कर्यमासां लक्ष्येषु दृश्यते ।

इतरा अप्यसंख्यास्ता नोक्ता विस्तरशङ्कया ।। ८८ ।।

यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः ।

अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ।। ८९ ।।

शोभा कान्तिश्च दीप्तिश्च माधुर्यं च प्रगल्भता ।

औदार्यं धैर्यमित्येते सप्तैव स्युरयत्नजाः ।। ९० ।।

लीला विलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम् ।

मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ।। ९१ ।।

विहृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।

हसितं चकितं केलिरित्यष्टादशसंख्यकाः ।। ९२ ।।

स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि ।

निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ।। ९३ ।।

भ्रूनेत्रादिविकारैस्तु संभोगेच्छाप्रकाशकः ।

भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते ।। ९४ ।।

हेलात्यन्तसमालक्ष्यविकारः स्यात् स एव तु ।

रुपयौवनलालित्यभागाद्यैरङ्गभूषणम्।। ९५ ।।

शोभा प्रोक्ता सैव कान्तिर्मन्मथाप्यायितद्युतिः ।

कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ।। ९६ ।।

सर्वावस्थाविशेषेषु माधुर्यं रमणीयता ।

निःसाध्वसत्वं प्रागल्भ्यमौदार्यं विनयः सदा ।। ९७ ।।

मुक्तात्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला।

अङ्गैर्वेषैरलङ्कारैः प्रेमिभिर्वचनैरपि ।। ९८ ।।

प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः।

यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्।। ९९ ।।

विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना।

स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्।

विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः।। १०० ।।

स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम्।

साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात्।। १०१ ।।

तद्भावभाविते चित्ते वल्लभस्य कथादिषु।

मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्।। १०२ ।।

केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात्।

आहुः कुट्टमितं नाम शिरःकरविधूननम्।। १०३ ।।

त्वरया हर्षरागादेर्दयितागमनादिषु।

अस्थाने विभ्रमादीनां विन्यासो विभ्रमो मतः।। १०४ ।।

सुकुमारतयाङ्गानां विन्यासो ललितं भवेत्।

मदो विकारः सौभाग्ययौवनाद्यवलेपजः ।। १०५ ।।

वक्तव्यकालेऽप्यवचो व्रीडया विहृतं मतम्।

तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितम्।। १०६ ।।

अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः।

वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः।। १०७ ।।

भूषाणामर्धरचना मिथ्या विष्वगवेक्षणम्।

रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके।। १०८ ।।

रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम्।

हसितं तु वृथाहासो यौवनोद्भेदसम्भवः।। १०९ ।।

कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः।

विहारे सह कान्तेन क्रीडितं केलिरुच्यते ।। ११० ।।

दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति।

प्रच्छन्नं वा भ्रमन्तं  वातिक्रान्तं पश्यति प्रियम्।। १११ ।।

बहुधा पृच्छ्यमानापि मन्दमन्दमधोमुखी।

सगद्गदस्वरं किञ्चित्प्रियं प्रायेण भाषते।। ११२ ।।

अन्यैः प्रवर्तितां शश्वत्सावधाना च तत्कथाम्।

शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी।। ११३ ।।

चिराय सविधे स्थानं प्रियस्य बहु मन्यते।

विलोचनपथं चास्य न गच्छत्यनलङ्कृता।। ११४ ।।

क्वापि कुन्तलसंव्यानसंयमव्यपदेशतः।

बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्।। ११५ ।।

आच्छादयति वागाद्यैः प्रियस्य परिचारकान्।

विश्वसित्यस्य मित्रेषु बहुमानं करोति च।। ११६ ।।

सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च।

सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम्।। ११७ ।।

स्थिता दृष्टिपथे शश्वत्प्रिये पश्यति दूरतः।

आभाषते परिजन सम्मुखं स्मरविक्रियाम्।। ११८ ।।

यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा।

कर्णकण्डूयनं तद्वत्कबरीमोक्षसंयमौ।। ११९ ।।

जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति।

भाले तथा वयस्याया रचयेत्तिलकक्रियाम्।। १२० ।।

अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते।

दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी।। १२१ ।।

न मुञ्चति च तं देशं नायको यत्र दृश्यते।

आगच्छति गृहं तस्य कार्यव्याजेन केनचित्।। १२२ ।।

दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते।

नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा।। १२३ ।।

मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम्।

प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्तते।। १२४ ।।

विकारान् सात्त्विकानस्य सम्मुखी चाधिगच्छति।

भाषते सूनृतं स्निग्धामनुरक्ता नितम्बिनी।। १२५ ।।

एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः ।

मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ।। १२६ ।।

अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ।

लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः।। १२७ ।।

दूतीसम्प्रेषणैर्नार्या भावाभिव्यक्तिरिष्यते।

दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।। १२८ ।।

बाला प्रव्रजिता कारूः शिल्पिन्याद्याः स्वयं तथा।

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः।। १२९ ।।

माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः।

एता अपि यथौचित्यादुत्तमाधममध्यमाः ।। १३० ।।

धीरोद्धतः पापकारी व्यसनी प्रतिनायकः।

उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ।। १३१ ।।

आलम्बनस्य चेष्टाद्या देशकालादयस्तथा।

उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन्।। १३२ ।।

लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः।

उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः।। १३३ ।।

तद्रूपा सात्त्विका भावास्तथा चेष्टाः परा अपि।

विकाराः सत्त्वसंभूताः सात्त्विकाः परिकीर्तिताः।। १३४ ।।

सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः।

स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।। १३५ ।।

वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः।

स्तम्भश्चेष्टाप्रतीघातो भयहर्षाऽऽमयादिभिः।। १३६ ।।

वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः।

हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ।। १३७ ।।

मदसंमदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः।

रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः।। १३८ ।।

विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता।

अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम्।। १३९ ।।

प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः।

विशेषादाभिमुख्येन चरणाद्व्यभिचारिणः।

स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः।। १४० ।।

निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः

स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः।

औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा

हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः।। १४१ ।।

तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्।

दैन्यचिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वसितादिकृत्।। १४२ ।।

आवेगः संभ्रमस्तत्र वर्षजे पिण्डिताङ्गता।

उत्पातजे स्रस्तताङ्गे, धूमाद्याकुलताग्निजे।। १४३ ।।

राजविद्रवजादेस्तु शस्त्रनागादियोजनम्।

गजादेः स्तम्भकम्पादि, पांस्वाद्याकुलतानिलात्।। १४४ ।।

इष्टाद्धर्षाः, शुचोऽनिष्टाज्ज्ञेयाश्चान्ये यथायथम्।

दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत्।। १४५ ।।

खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः।

संमोहानन्दसंभेदो मदो मद्योपयोगजः।। १४६ ।।

अमुना चोत्तमः शेते मध्यो हसति गायति।

अधमप्रकृतिश्चापि परुषं वक्ति रोदिति।। १४७ ।।

अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः।

अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ।। १४८ ।।

शौर्यापराधादिभवं भवेच्चण्डत्वमुग्रता।

तत्र स्वेदशिरःकम्पतर्जनाताडनादयः।। १४९ ।।

मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः।

मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ।। १५० ।।

निद्रापगमहेतुभ्यो विबोधश्चेतनागमः।

जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ।। १५१ ।।

स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः।

कोपावेगभयग्लानिसुखदुःखादिकारकः ।। १५२ ।।

मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः।

भूपातकम्पप्रस्वेदफेनलालादिकारकः ।। १५३ ।।

गर्वो मदः प्रभावश्रीर्विद्यासत्कुलतादिजः ।

अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ।। १५४ ।।

शराद्यैर्मरणं जीवत्यागोऽङ्गपतनादिकृत्।

आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भाऽऽसितादिकृत् ।। १५५ ।।

निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता।

नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत् ।। १५६ ।।

चेतः संमीलनं निद्रा श्रमक्लममदादिजा ।

जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम् ।। १५७ ।।

भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था ।

व्यापारान्तरसक्त्यन्यथावभाषणविलोकनादिकरी ।। १५८ ।।

इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।

चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् ।। १५९ ।।

चित्तसंमोह उन्मादः कामशोकभयादिभिः।

अस्थानहासरुदितगीतप्रलपनादिकृत् ।। १६० ।।

परक्रौर्यात्मदोषाद्यैः शङ्काऽनर्थस्य तर्कणम्।

वैवर्ण्यकम्पवैस्वर्यपार्श्वालोकाऽऽस्यशोषकृत् ।। १६१ ।।

सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नयनादिकृत् ।

स्मृतिः पूर्वानुभूतार्थविषयज्ञानमुच्यते ।। १६२ ।।

नीतिमार्गानुसृत्यादेरर्थनिर्धारणं मतिः।

स्मेरता धृतिसंतोषौ बहुमानश्च तद्भवाः ।। १६३ ।।

व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत्।

निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः।। १६४ ।।

धाष्ट्र्याभावो व्रीडा वदनानमनादिकृद् दुराचारात्।

हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः ।। १६५ ।।

असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता ।

दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ।। १६६ ।।

उपायाभावजन्मा तु विषादः सत्त्वसंक्षयः।

निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ।। १६७ ।।

ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः।

सौहित्यवचनोल्लाससहासप्रतिभादिकृत्।। १६८ ।।

मात्सर्यद्वेषरागादेश्चापल्यं त्वनमस्थितिः।

तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ।। १६९ ।।

रत्यायासमनस्तापक्षुत्पिपासादिसंभवा ।

ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत् ।। १७० ।।

ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।

तर्को विचारः संदेहाद् भ्रूशिरोऽङ्गुलिनर्तकः ।। १७१ ।।

रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ।

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः ।। १७२ ।।

शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः ।

इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः ।। १७३ ।।

अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।

आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति संमतः ।। १७४ ।।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।

जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च ।। १७५ ।।

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम् ।

वागादिवैकृतैश्चेतोविकासो हास इष्यते ।। १७६ ।।

इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।

प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते ।। १७७ ।।

कार्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।

रौद्रशक्त्या तु जनितं चित्तवैक्लव्यजं भयम् ।। १७८ ।।

दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा ।

विविधेषु पदार्थेषु लोकसीमातिवर्तिषु ।। १७९ ।।

विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः ।

शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम् ।। १८० ।।

नानाभिनयसंबन्धान् भावयन्ति रसान् यतः ।

तस्माद् भावा अमी प्रोक्ताः स्थायिसंचारिसात्त्विकाः ।। १८१ ।।

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।

बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ।। १८२ ।।

शृङ्गं मन्मथोद्भेदस्तदागमनहेतुकः ।

उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ।। १८३ ।।

परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् ।

आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ।। १८४ ।।

चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।

भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ।। १८५ ।।

त्यक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः ।

स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ।।

विप्रलम्भोऽथ संभोग इत्येष द्विविधो मतः ।। १८६ ।।

यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।

स च पूर्वरागमानप्रवासकरुणात्मकश्चतुर्धा स्यात् ।। १८७ ।।

श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।

दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ।। १८८ ।।

श्रवणं तु भवेत्तत्र दूतवन्दिसखीमुखात् ।

इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ।। १८९ ।।

अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च ।

उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः ।। १९० ।।

अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम् ।

उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि ।। १९१ ।।

अलक्ष्यवाक्प्रलापः स्याच्चेतसो भ्रमणाद् भृशम् ।

व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः ।। १९२ ।।

जडता हीनचेष्टत्वमङ्गानां मनसस्तथा ।

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।। १९३ ।।

जातप्रायं तु तद्वाच्यं चेतसाकाङ्क्षितं तथा ।

वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ।। १९४ ।।

आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः।

नीली कुसुम्भं मञ्जिष्ठा पूर्वरागोऽपि च त्रिधा ।। १९५ ।।

न चातिशोभते यन्नापैति प्रेम मनोगतम् ।

तन्नीलीरागमाख्यातं यथा श्रीरामसीतयोः ।। १९६ ।।

कुसुम्भरागं तत्प्राहुर्यदपैति च शोभते ।

मञ्जिष्ठारागमाहुस्तद् यन्नापैत्यतिशोभते ।। १९७ ।।

मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः।

द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ।। १९८ ।।

प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ।

पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ।। १९९ ।।

ईर्ष्या मानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा।

उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा ।। २०० ।।

साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम्।

तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात् ।। २०१ ।।

तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम् ।

दानं व्याजेन भूषादेः पादयोः पतनं नतिः ।। २०२ ।।

सामादौ तु परिक्षीणे स्यादुपेक्षावधीरणम् ।

रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ।। २०३ ।।

प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च संभ्रमात्।

तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः ।। २०४ ।।

निःश्वासोच्छ्वास रुदितभूमिपातादि जायते ।

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशतारुचिः ।। २०५ ।।

अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः।

मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ।। २०६ ।।

असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः।

अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताऽधृतिः ।। २०७ ।।

अनालम्बनता चापि शून्यता मनसः स्मृता।

तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा ।

भावी भवन्भूत इति त्रिधा स्यात्तत्र कार्यजः ।। २०८ ।।

यूनोरेकतरस्मिन्गतवति लोकान्तरं पुनर्लभ्ये।

विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः।। २०९ ।।

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।

यत्रानुरक्तावन्योन्यं संभोगोऽयमुदाहृतः ।। २१० ।।

संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।

अयमेक एव धीरैः कथितः संभोगशृङ्गारः ।। २११ ।।

तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः।

जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ।। २१२ ।।

अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च।

कथितश्चतुर्विधोऽसावानन्तर्यात्तु पूर्वरागादेः ।। २१३ ।।

विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत्।

हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ।। २१४ ।।

विकृताकारवाक्चेष्टं यमालोक्य हसेज्जनः।

तमत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् ।। २१५ ।।

अनुभावोऽक्षिसङ्कोचवदनस्मेरतादयः।

निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः।। २१६ ।।

ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च।

नीचानामपहसितं तथातिहसितं तदेष षड्भेदः।। २१७ ।।

ईषद्विकासिनयनं स्मितं स्यात् स्पन्दिताधरम् ।

किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ।। २१८ ।।

मधुरस्वरं विहसितं सांसशिरःकम्पमवहसितम्।

अपहसितं सास्राक्षं विक्षिप्ताङ्गं च भवत्यतिहसितम् ।। २१९ ।।

यस्य हासः स चेत् क्वापि साक्षान्नैव निवध्यते।

तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ।। २२० ।।

अभेदेन विभावादिसाधारण्यात्प्रतीयते ।

सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ।। २२१ ।।

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।

धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ।। २२२ ।।

शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम् ।

तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः ।। २२३ ।।

अनुभावा दैवनिन्दाभूपातक्रन्दितादयः ।

वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलपनानि च ।। २२४ ।।

निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः ।

विषादजडतोन्मादचिन्ताद्या व्यभिचारिणः ।। २२५ ।।

शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।

विप्रलम्भे रतिः स्थायी पुनःसंभोगहेतुकः ।। २२६ ।।

रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।

आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ।। २२७ ।।

मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव ।

संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढा ।। २२८ ।।

भ्रूविभङ्गौष्ठनिर्देशबाहुस्फोटनतर्जनाः ।

आत्मावदानकथनमायुधोत्क्षेपणानि च ।। २२९ ।।

उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।

अनुभावास्तथाक्षेपक्रूरसंदर्शनादयः ।। २३० ।।

मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः ।

रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ।। २३१ ।।

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।

महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः ।। २३२ ।।

आलम्बनविभावास्तु विजेतव्यादयो मताः ।

विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः ।

अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ।। २३३ ।।

सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः ।

स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात् ।। २३४ ।।

भयानको भयस्थायिभावो भूताधिदैवतः।'

स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ।। २३५ ।।

यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।

चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ।। २३६ ।।

अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् ।

प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ।। २३७ ।।

जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः ।

शङ्कापस्मारसम्भ्रान्तिमृत्य्वाद्या व्यभिचारिणः ।। २३८ ।।

जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।

नीलवर्णो महाकालदैवतोऽयमुदाहृतः ।। २३९ ।।

दुर्गन्धमांसरुधिरमेदांस्यालम्बनं मतम् ।

तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ।। २४० ।।

निष्ठीवनास्यवलननेत्रसङ्कोचनादयः ।

अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ।। २४१ ।।

मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ।

अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः ।। २४२ ।।

पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ।

गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ।। २४३ ।।

स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमाः ।

तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः ।। २४४ ।।

वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः ।

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ।। २४५ ।।

कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ।

अनित्यत्वादिनाशेषवस्तुनिःसारता तु या ।। २४६ ।।

परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ।

पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।। २४७ ।।

महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः।

रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।। २४८ ।।

निर्वेदहर्षस्मरणमतिभूतदयादयः ।

निरहङ्काररूपत्वाद् दयावीरादिरेष नो ।। २४९ ।।

युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः ।

रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिश्च न विरुद्धा ।। २५० ।।

स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।

स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ।। २५१ ।।

उद्दीपनानि तच्चेष्टा विद्याशौर्यदयादयः।

आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम् ।। २५२ ।।

पुलकानन्दबाष्पाद्या अनुभावाः प्रकीर्तिताः ।

सञ्चारिणोऽनिष्टशङ्काहर्षगर्वादयो मताः ।। २५३ ।।

पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः ।

आद्यः करुणबीभत्सरौद्रवीरभयानकैः ।। २५४ ।।

भयानकेन करुणेनापि हास्यो विरोधभाक्।

करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः ।। २५५ ।।

रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि ।

भयानकेन शान्तेन तथा वीररसः स्मृतः ।। २५६ ।।

शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ।

शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ।। २५७ ।।

शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ।

कुतोऽपि कारणात्क्वापि स्थिरतामुपयन्नपि ।। २५८ ।।

उन्मादादिर्न तु स्थायी न पात्रे स्थैर्यमेति यत्।

रसभावौ तदाभासौ भावस्य प्रशमोदयौ ।। २५९ ।।

सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः ।

सञ्चारिणः प्रधानानि देवादिविषया रतिः ।। २६० ।।

उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ।

यथा मरिचखण्डादेरेकीभावे प्रपाणके ।। २६१ ।।

उद्रेकः कस्यचित्क्वापि तथा सञ्चारिणो रसे ।

अनौचित्यप्रवृत्तत्व आभासो रसभावयोः ।। २६२ ।।

उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च ।

बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम् ।। २६३ ।।

प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्यगादिगते ।

शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ।। २६४ ।।

शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।

ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ।। २६५ ।।

उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र।

भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ।। २६६ ।।

भावस्य शान्तावुदये संधिमिश्रितयोः क्रमात्।

भावस्य शान्तिरुदयः संधिः शबलता मता ।। २६७ ।।

## चतुर्थः परिच्छेदः

काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्विधा मतम्।

वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तम् ।। १ ।।

भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।

अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ।। २ ।।

अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते ।

अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ।। ३ ।।

विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः ।

असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ।। ४ ।।

तत्राद्यो रसभावादिरेक एवात्र गण्यते ।

एकोऽपि भेदोऽनन्तत्वात् संख्येयस्तस्य नैव यत् ।। ५ ।।

शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे।

ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ।। ६ ।।

वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा।

वस्तु वालङ्कृतिर्वापि द्विधार्थः सम्भवी स्वतः ।। ७ ।।

कवेः प्रौढोक्तिसिद्धो वा तन्निवद्धस्य वेति षट् ।

षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः ।। ८ ।।

अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ।
एकः शब्दार्थशक्त्युत्थे तदष्टादशधा ध्वनिः ।। ९ ।।

वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः ।
प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः ।। १० ।।

पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः ।
तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ।। ११ ।।

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया ।
वेदखाग्निशरः (५३०४) शुद्धैरिषुवाणाग्निसायकाः (५३५५) ।। १२ ।।

अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये।
तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम् ।। १३ ।।

संदिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्।
व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ।। १४ ।।

## पंचमः परिच्छेदः

वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम् ।
अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम् ।। १ ।।

बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम् ।
आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ।। २ ।।

प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाभिधे ।
किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा ।। ३ ।।

नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम् ।
आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः ।। ४ ।।

सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः ।

रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः ।। ५ ।।

## षष्ठः परिच्छेदः

दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।

दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकम् ।। १ ।।

भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।

आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा ।। २ ।।

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।

ईहामृमाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ।। ३ ।।

नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।

प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ।। ४ ।।

संलापकं श्रीगदितं शिल्पकं च विलासिका ।

दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ।। ५ ।।

अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।

विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ।। ६ ।।

नाटकं ख्यातवृत्तं स्यात् पञ्चसंधिसमन्वितम् ।

विलासद्ध्र्यादिगुणवद्युक्तं नानाविभूतिभिः ।। ७ ।।

सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।

पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ।। ८ ।।

प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।

दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ।। ९ ।।

एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।

अङ्गमन्ये रसाः सर्वे कार्यो निर्वहणेऽद्भुतः ।। १० ।।

चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।

गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम् ।। ११ ।।

प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।

भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ।। १२ ।।

विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः ।

युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ।। १३ ।।

नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।

आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ।। १४ ।।

नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।

आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ।। १५ ।।

दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।

विवाहोभोजनं शापोत्सर्गौ मृत्यू रतं तथा ।। १६ ।।

दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् ।

शयनाधरपानादि नगराद्यवरोधनम् ।। १७ ।।

स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।

देवीपरिजनादीनाममात्यवणिजामपि ।। १८ ।।

प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।

अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ।। १९ ।।

अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।

अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ।। २० ।।

तत्र पूर्वं पूर्वरङ्गः सभापूजा ततः परम् ।

कथनं कविसंज्ञादेर्नाटकस्याऽप्यथामुखम् ।। २१ ।।

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।

कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ।। २२ ।।

प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।

तथाऽप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।। २३ ।।

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।

देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ।। २४ ।।

माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।

पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ।। २५ ।।

पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।

प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः ।। २६ ।।

दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।

सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ।। २७ ।।

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।

रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ।। २८ ।।

ऋतुं च कञ्चित्प्रायेण भारतीं वृत्तिमाश्रितः ।

भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ।। २९ ।।

तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।

अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ।। ३० ।।

नटो विदूषको वापि पारिपार्श्विक एव वा ।

सूत्रधारेण सहिताः संलापं यत्र कुर्वते ।। ३१ ।।

चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।

आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ।। ३२ ।।

उद्घात्य(त)कः कथोद्घातः प्रयोगातिशयस्तथा ।

प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ।। ३३ ।।

पदानि त्वगतार्थानि तदर्थगतये नराः ।

योजयन्ति पदैरन्यैः स उद्घात्य(त)क उच्यते ।। ३४ ।।

सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।

भवेत्पात्रप्रवेशश्चेत्कथोद्घातः स उच्यते ।। ३५ ।।

यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।

तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ।। ३६ ।।

कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत् ।

तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्तकम् ।। ३७ ।।

यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते ।

प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं वुधैः ।। ३८ ।।

योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि ।

नेपथ्योक्तं श्रुतं यत्र त्वाकाशवचनं तथा ।। ३९ ।।

समाश्रित्यापि कर्तव्यमामुखं नाटकादिषु ।

एषामामुखभेदानामेकं कञ्चित्प्रयोजयेत् ।। ४० ।।

तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ।

प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत् ।। ४१ ।।

इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।

आधिकारिकमेकं स्यात्प्रासङ्गिकमथापरम् ।। ४२ ।।

अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।

तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ।। ४३ ।।

अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते ।

पताकास्थानकं योज्यं सुविचार्येह वस्तुनि ।। ४४ ।।

यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।

आगन्तुकेन भावेन पताकास्थानकं तु तत् ।। ४५ ।।

सहसैवार्थसंपत्तिर्गुणवत्युपचारतः ।

पताकास्थानकमिदं प्रथमं परिकीर्तितम् ।। ४६ ।।

वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम्।

पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ।। ४७ ।।

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।

श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ।। ४८ ।।

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।

प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ।। ४९ ।।

यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा ।

विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ।। ५० ।।

अङ्केष्वदर्शनीया या वक्तव्यैव च संमता ।

या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ।। ५१ ।।

अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः ।

वर्षादूर्ध्वं तु यद्वस्तु तत्स्याद्वर्षादधोभवम् ।। ५२ ।।

दिनावसाने कार्यं यद्दिने नैवोपपद्यते ।

अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ।। ५३ ।।

अर्थोपपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।

चूलिकाङ्काऽवतारोऽथ स्यादङ्कमुखमित्यपि ।। ५४ ।।

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।

संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।। ५५ ।।

मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।

शुद्धः स्यात्स तु संकीर्णो नीचमध्यमकल्पितः ।। ५६ ।।

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।

अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ।। ५७ ।।

अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।

अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ।। ५८ ।।

यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ।

यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला ।। ५९ ।।

तदङ्कमुखमित्याहुर्बीजार्थख्यापकं च तत् ।

अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।। ६० ।।

अपेक्षितं परित्याज्यं नीरसं वस्तु विस्तरम् ।

यदा संदर्शयेच्छेषमामुखानन्तरं तदा ।। ६१ ।।

कार्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः ।

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।। ६२ ।।

आदावेव तदाऽङ्के स्यादामुखाक्षेपसंश्रयः ।

विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः ।। ६३ ।।

अन्योऽन्येन तिरोधानं न कुर्याद्रसवस्तुनोः ।

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।। ६४ ।।

अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ।

अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।। ६५ ।।

फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ।

अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ।। ६६ ।।

व्यापि प्रसङ्गिकं वृत्तं पताकेत्यभिधीयते ।

पताकानायकस्य स्यान्न स्वकीयं फलान्तरम् ।। ६७ ।।

गर्भे सन्धौ विमर्शे वा निर्वाहस्तस्य जायते ।

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।। ६८ ।।

प्रकरीनायकस्य स्यान्न स्वकीयं फलान्तरम् ।

अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ।। ६९ ।।

समापनं तु यत्सिद्ध्यै तत्कार्यमिति संमतम् ।

अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।।७०।।

आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ।

भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ।। ७१ ।।

प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।

उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ।। ७२ ।।

अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।

साऽवस्था फलयोगः स्याद्यः समग्रफलोदयः ।। ७३ ।।

यथासंख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः ।

पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्चसन्धयः ।। ७४ ।।

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ।। ७५ ।।

इति पञ्चाऽस्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ।

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।। ७६ ।।

प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ।

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।। ७७ ।।

लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत् ।

फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।। ७८ ।।

गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ।

यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।। ७९ ।।

शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।। ८० ।।

एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ।

उपक्षेपः परिकरः परिन्यासो विलोभनम् ।। ८१ ।।

युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।

उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ।। ८२ ।।

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।

समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ।। ८३ ।।

तन्निष्पत्तिः परिन्यासः गुणाख्यानं विलोभनम् ।

संप्रधारणमर्थानां युक्तिः प्राप्तिः सुखागमः ।। ८४ ।।

बीजस्यागमनं यत्तु तत्समाधानमुच्यते ।

सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ।। ८५ ।।

कुतूहलेत्तरा वाचः प्रोक्ता तु परिभावना ।

बीजार्थस्य प्ररोहः स्यादुद्भेदः करणं पुनः ।। ८६ ।।

प्रकृतार्थसमारम्भो भेदः संहृतभेदनम् ।

विलासः परिसर्पश्च विधुतं तापनं तथा ।। ८७ ।।

नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ।

विरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम् ।। ८८ ।।

पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ।

समीहा रतिभोगार्था विलास इति कथ्यते ।। ८९ ।।

इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।

कृतस्यानुनयस्यादौ विधूतं त्वपरिग्रहः ।। ९० ।।

उपायादर्शनं यत्तु तापनं नाम तद् भवेत् ।

परिहासवचो नर्म धृतिस्तु परिहासजा ।। ९१ ।।

नर्मद्युतिः प्रगमनं वाक्यं स्यादुत्तरोत्तरम् ।

विरोधो व्यसनप्राप्तिः क्रुद्धस्यानुनयः पुनः ।। ९२ ।।

स्यात्पर्युपासनं पुष्पं विशेषवचनं मतम् ।

प्रत्यक्षनिष्ठुरं वज्रम् उपन्यासः प्रसादनम् ।। ९३ ।।

चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।। ९४ ।।

संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ।

त्रो(तो)टकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा ।। ९५ ।।

तत्र स्यादाश्रयं वाक्यमभूताहरणं मतम् ।

तत्त्वार्थकथनं मार्गः रूपं वाक्यं वितर्कवत् ।। ९६ ।।

उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ।

भावतत्त्वोपलब्धिस्तु क्रमः स्यात् संग्रहः पुनः ।। ९७ ।।

सामदानार्थसंपन्नः लिङ्गादूहोऽनुमानता ।

रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत् ।। ९८ ।।

रहस्यार्थस्य तद्भेदः क्षिप्तिः स्यात् त्रो(तो)टकं पुनः ।

संरब्धवागधिबलमभिसंधिच्छलेन यः ।। ९९ ।।

नृपादिजनिता भीतिरुद्वेगः परिकीर्तितः ।

शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः ।। १०० ।।

अपवादोऽथ संफेटो व्यवसायो द्रवो द्युतिः ।

शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ।। १०१ ।।

प्ररोचना विमर्शे स्यादादानं छादनं तथा ।

दोषप्रख्यापवादः स्यात् संफेटो रोषभाषणम् ।। १०२ ।।

व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः ।

द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ।। १०३ ।।

तर्जनोद्वेजने प्रोक्ता द्युतिः शक्तिः पुनर्भवेत् ।।

विरोधस्य प्रशमनम् प्रसङ्गो गुरुकीर्त्तनम् ।। १०४ ।।

मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः ।

ईप्सितार्थप्रतीवात; प्रतिषेध इतीष्यते ।। १०५ ।।

कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ।

प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ।। १०६ ।।

कार्यसंग्रह आदानं तदाहुश्छादनं पुनः ।।

कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ।। १०७ ।।

सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ।

कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ।। १०८ ।।

भाषणं पूर्ववाक्यञ्च काव्यसंहार एव च ।

प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ।। १०९ ।।

बीजोपगमनं सन्धिः विबोधः कार्यमार्गणम् ।

उपन्यासस्तु कार्याणां ग्रथनं निर्णयः पुनः ।। ११० ।।

अनुभूतार्थकथनं वदन्ति परिभाषणम् ।

परिवादकृतं वाक्यम् लब्धार्थशमनं कृतिः ।। १११ ।।

शुश्रूषादिः प्रसादः स्यादानन्दो वाञ्छितागमः ।

समयो दुःखनिर्याणं तद् भवेदुपगूहनम् ।। ११२ ।।

यत् स्याददद्भुतसम्प्राप्तिः सामदानादि भाषणम् ।

पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् ।। ११३ ।।

वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते ।

नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ।। ११४ ।।

चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ।

कुर्यादनियते तस्य संधावपि निवेशनम् ।। ११५ ।।

रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ।

इष्टार्थरचनाश्चर्यलाभो वृत्तान्तविस्तारः ।। ११६ ।।

रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनं तथा ।

प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम् ।। ११७ ।।

अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।

अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ।। ११८ ।।

संपादयेतां संध्यङ्गं नायकप्रतिनायकौ ।

तदभावे पताकाद्यास्तदभावे तथेतरत् ।। ११९ ।।

रसव्यक्तिमपेक्ष्यैषामङ्गानां संनिवेशनम् ।

न तु केवलया शास्त्रस्थितिसंपादनेच्छया ।। १२० ।।

अविरुद्धं तु यद्वृत्तं रसादिव्यक्तयेऽधिकम् ।

तदप्यन्यथयेद्धीमान्न वदेद्वा कदाचन ।। १२१ ।।

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः ।

रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ।। १२२ ।।

चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः ।

स्युर्नायिकादिव्यापारविशेषा नाटकादिषु ।। १२३ ।।

या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंकुला पुष्कलनृत्यगीता ।

कामोपभोगप्रभवोपचारा सा कैशिकी चारुविलासयुक्ता ।। १२४ ।।

नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नमगर्भश्च ।

चत्वार्यङ्गान्यस्या वैदग्ध्यक्रीडितं नर्म ।। १२५ ।।

इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् ।

विहितं शुद्धहास्येन सशृङ्गारभयेन च ।। १२६ ।।

नर्मस्फूर्जः सुखारम्भो भयान्तो नवसंगमः ।

नर्मस्फोटो भावलेशैः सूचिताल्परसो मतः ।। १२७ ।।

नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्तिनः ।

सात्त्वती वहुला सत्त्वशौर्यत्यागदयार्जवैः ।। १२८ ।।

सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ।

उत्थापकोऽथ सांघात्यः संलापः परिवर्तकः ।। १२९ ।।

विज्ञेया इति चत्वारः सात्त्वत्याः परिकीर्त्तितः ।

उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ।। १३०।।

प्रारब्धादन्यकार्याणां कारणं परिवर्तकः ।

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।। १३२ ।।

संयुक्ता वधबन्धाद्यैरुद्धतारभटी मता ।

वस्तूत्थापनसंफेटौ संक्षिप्तिरवपातनम् ।। १३३ ।।

इति भेदास्तु चत्वार आरभट्याः प्रकीर्तिताः ।

मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ।। १३४ ।।

संफेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ।

संक्षिप्ता वस्तुरचना शिल्पैरितरथापि वा ।। १३५ ।।

संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः ।

प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसंभवम् ।। १३६ ।।

अवपातनमित्युक्तं पूर्वमुक्तैव भारती ।

अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।। १३७ ।।

सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ।

रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ।। १३८ ।।

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।

अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ।। १३९ ।।

किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।

श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ।। १४० ।।

दत्तां सिद्धां च सेनां च वेश्यानां नाम दर्शयेत् ।

दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ।। १४१ ।।

वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद् भवेत् ।

नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ।। १४२ ।।

नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु ।

नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ।। १४३ ।।

प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ।

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।। १४४ ।।

राजर्षिभिर्वयस्येति तथा विदूषकेण च ।

राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ।। १४५ ।।

स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः ।

वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।। १४६ ।।

वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम् ।

सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।। १४७ ।।

सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ।

वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः ।। १४८ ।।

भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ।

वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः ।। १४९ ।।

आयुष्मन् रथिनं सूतो वृद्धं तातेति चेतरः ।

वत्सपुत्रकतातेति नाम्ना गोत्रेण वा सुतः ।। १५० ।।

शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ।

विप्रैरयममात्येति सचिवेति च भण्यते ।। १५१ ।।

साधो ! इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ।

स्वगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।। १५२ ।।

उपाध्यायेति चाचार्यो महाराजेति भूपतिः ।

स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।। १५३ ।।

भद्रसौम्यमुखेत्येवमधमैस्तु कुमारकः ।

वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ।। १५४ ।।

पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।

हलेति सदृशी प्रेष्या हञ्जे वेश्याज्जुका तथा ।। १५५ ।।

कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ।

आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ।। १५६ ।।

शका(शाक्या)दयश्च संभाष्या भद्रदत्तादिनामभिः ।

यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ।। १५७ ।।

तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ।

पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् ।। १५८ ।।

सौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम् ।

आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।। १५९ ।।

अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ।

चेटानां राजपुत्राणां श्रेष्ठानां चार्धमागधी ।। १६० ।।

प्राच्या विदूषकादीनां, धूर्तानां स्यादवन्तिजा ।

योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ।। १६१ ।।

शबराणां शकादीनां शाबरीं संप्रयोजयेत् ।

बाह्लीकभाषोदीच्यानां द्राविडी द्राविडादिषु ।। १६२ ।।

आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु ।

आभीरी शाबरी चापि काष्ठपत्रोपजीविषु ।। १६३ ।।

तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक् ।

चेटीनामप्यनीचानामपि स्यात्सौरसेनिका ।। १६४ ।।

बालानां षण्डकानां च नीचग्रहविचारिणाम् ।

उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित् ।। १६५ ।।

ऐश्वर्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च ।

भिक्षुवल्कधरादीनां प्राकृतं संप्रयोजयेत् ।। १६६ ।।

संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ।

देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् ।। १६७ ।।

कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः ।। १६८ ।।

योषित्सखीबालवेश्याकितवाप्सरसां तथा ।

वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा ।। १६९ ।।

षट्त्रिंशल्लक्षणान्यत्र, नाट्यालंकृतयस्तथा ।

त्रयस्त्रिंशत्प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ।। १७० ।।

लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ।

भूषणाक्षरसंघातौ शोभोदाहरणं तथा ।। १७१ ।।

हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ।

निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ।। १७२ ।।

दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ।

विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ ।। १७३ ।।

दाक्षिण्यानुनयौ मालार्थापत्तिर्गर्हणं तथा ।

पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम् ।। १७४ ।।

लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ।

लक्षणानि गुणैः सालंकारैर्योगस्तु भूषणम् ।। १७५ ।।

वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः ।

सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ।। १७६ ।।

श्लिष्टश्लक्ष्णचित्रार्था सा शोभेत्यभिधीयते ।

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।। १७७ ।।

साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ।

हेतुर्वाक्यं सभासोक्तमिष्टकृद्धेतुदर्शनात् ।। १७८ ।।

संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ।

दृष्टान्तो यस्तु पक्षेऽर्थसाधनाय निदर्शनम् ।। १७९ ।।

तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना ।

संचयोऽर्थानुरूपो यः पदानां स पदोच्चयः ।। १८० ।।

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।

परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ।। १८१ ।।

अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ।

प्राप्तिः केनचिदंशेन किञ्चिद्यत्रानुमीयते ।। १८२ ।।

विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम् ।

देशकालस्वरूपेण वर्णना दिष्टमुच्यते ।। १८३ ।।

उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।

गुणातिपातः कार्यं यद्विपरीतं गुणान्प्रति ।। १८४ ।।

यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ।

सिद्धानर्थान् बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ।। १८५ ।।

पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्यते ।

बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये ।। १८६ ।।

दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः ।

विचारस्यान्यथाभावः संदेहात्तु विपर्ययः ।। १८७ ।।

दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम् ।

वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ।। १८८ ।।

माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम् ।

अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ।। १८९ ।।

दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत् ।

अभ्यर्थनापरैर्वाक्यैः पृच्छार्थान्वेषणं मता ।। १९० ।।

प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम् ।

सारुप्यमनुरूपस्य सारूप्यात्क्षोभवर्धनम् ।। १९१ ।।

संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते ।

गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनम् ।। १९२ ।।

स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ।

मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ।। १९३ ।।

विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्यते ।

स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ।। १९४ ।।

आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।

उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः ।। १९५ ।।

आशंसाध्यवसायौ च विसर्पोल्लेखसंज्ञितौ ।

उत्तेजनं परीवादो नीतिरर्थविशेषणम् ।। १९६ ।।

प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्तनम् ।

उत्कीर्त्तनं तथा याच्ञा परिहारो निवेदनम् ।। १९७ ।।

प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।

इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ।। १९८ ।।

आशीरिष्टजनाशंसाऽऽक्रन्दः प्रलपितं शुचौ ।

कपट मायया यत्र रूपमन्यद्विभाव्यते ।। १९९ ।।

अक्षमा सा परिभवः स्वल्पोऽपि’ न विषह्यते ।

गर्वोऽवलेपजं वाक्यं कार्यस्यारम्भ उद्यमः ।। २०० ।।

ग्रहणं गुणवत्कार्यहेतोराश्रय उच्यते ।

उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि ।। २०१ ।।

आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।

अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ।। २०२ ।।

मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।

उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ।। २०३ ।।

आशंसनं स्यादाशंसा प्रतिज्ञाध्यवसायकः ।

विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम् ।। २०४ ।।

कार्यग्रहणमुल्लेख उत्तेजनमितीष्यते ।

स्वकार्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ।। २०५ ।।

भर्त्सना तु परीवादो नीतिः शास्त्रेण वर्तनम् ।

उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा ।। २०६ ।।

उपालम्भविशेषेण तत् स्यादर्थविशेषणम् ।

प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ।। २०७ ।।

साहाय्यं सङ्कटे यत्स्यात् सानुकूल्यं परस्य च ।

अभिमानः स एव स्यात् प्रश्रयादनुवर्तनम् ।। २०८ ।।

अनुवृत्तिः भूतकार्याख्यानमुत्कीर्तनं मतम् ।

याच्ञा तु क्वापि याच्ञा या स्वयं दूतमुखेन वा ।। २०९ ।।

परिहार इति प्रोक्तः कृतानुचितमार्जनम् ।

अवधीरितकर्तव्यकथनं तु निवेदनम् ।। २१० ।।

प्रवर्तनं तु कार्यस्य यत्स्यात्साधुप्रवर्तनम् ।

आख्यानं पूर्ववृत्तोक्तिर्युक्तिरर्थावधारणम् ।। २११ ।।

प्रहर्षः प्रमदाधिक्यं शिक्षा स्यादुपदेशनम् ।

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।। २१२ ।।

प्रच्छेदकस्त्रिगूढं च सैन्धवाख्यं द्विगूढकम् ।

उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेव च ।। २१३ ।।

लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ।

तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ।। २१४ ।।

शुद्धं गानं गेयपदं स्थितपाठ्यं तदुच्यते ।

मदनोत्तापिता यत्र पठति प्राकृतं स्थिता ।। २१५ ।।

निखिलातोद्यरहितं शोकचिन्तान्विताबला ।

अप्रसाधितगात्रं यदासीनासीनमेव तत् ।। २१६ ।।

आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च ।

स्त्रीपुंसयोर्विपर्यासचेष्टितं पुष्पगण्डिका ।। २१७ ।।

अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना ।

वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः ।। २१८ ।।

स्त्रीवेषधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम् ।

कश्चन भ्रष्टसंकेतः सुव्यक्तकरणान्वितः ।। २१९ ।।

प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं मतम् ।

चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ।। २२० ।।

द्विगूढं रसभावाढ्यमुत्तमोत्तमकं पुनः ।

कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ।। २२१ ।।

हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ।

उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।। २२२ ।।

विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ।

एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ।। २२३ ।।

अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ।

भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।। २२४ ।।

शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।

सापायधर्मकामार्थपरो धीरप्रशान्तकः ।। २२५ ।।

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।

तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ।। २२६ ।।

कितवद्यूतकारादिविटचेटकसंकुलः ।

भाणः स्याद् धूर्तचरितो नानावस्थान्तरात्मकः ।। २२७ ।।

एकाङ्क एक एवात्र निपुणः पण्डितो विटः ।

रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा ।। २२८ ।।

संबोधनोक्तिप्रत्युक्तो कुर्यादाकाशभाषितैः ।

सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यवर्णनैः ।। २२९ ।।

तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।

मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।। २३० ।।

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।

हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ।। २३१ ।।

एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।

कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ।। २३२ ।।

राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।

हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ।। २३३ ।।

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम् ।

सन्धयो निर्विमर्शास्तु त्रयोऽङ्कास्तत्र चादिमे ।। २३४ ।।

सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः ।

नायका द्वादशोदात्ताः प्रख्याता देवमानवाः ।। २३५ ।।

फलं पृथक्पृथक्तेषां वीरमुख्योऽखिलो रसः ।

वृत्तयो मन्दकैशिक्यौ नात्र विन्दुप्रवेशकौ ।। २२६ ।।

वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश ।

गायत्र्युष्णिङ्मुखान्यत्र च्छन्दांसि विविधानि च ।। २३७ ।।

त्रिशृङ्गारस्त्रिकपटः कार्यश्चायं त्रिविद्रवः ।

वस्तु द्वादशनालीभिर्निष्पाद्यं प्रथमाङ्कगम् ।। २३८ ।।

द्वितीयेऽङ्के चतसृभिर्द्वाभ्यामङ्के तृतीयके ।

धर्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः ।। २३९ ।।

स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः ।

अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ।। २४० ।।

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।

उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ।। २४१ ।।

अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।

चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ ।। २४२ ।।

नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।

भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ।। २४३ ।।

वृत्तयः कैशिकीहीना निर्विमर्शाश्च सन्धयः ।

दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ।। २४४ ।।

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्तितः ।

मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ।। २४५ ।।

नरदिव्यावनियमौ नायकप्रतिनायकौ ।

ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ।। २४६ ।।

दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।

शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत् ।। २४७ ।।

पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।

युद्धमानीय संरम्भं परं व्याजान्निवर्तते ।। २४८ ।।

महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।

एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ।। २४९ ।।

दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ।। २५० ।।

रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।

प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ।। २५१ ।।

भाणवत्सन्धिवृत्त्यङ्गान्यस्मिञ्जयपराजयौ ।

युद्धं च वाचा कर्तव्यं निर्वेदवचनं बहु ।। २५२ ।।

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।

आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ।। २५३ ।।

सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान् रसान् प्रति ।

मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ।। २५४ ।।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।

उद्घात्य(त)कावलगिते प्रपञ्चस्त्रिगतं छलम् ।। २५५ ।।

वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।

असत्प्रलापव्याहारमृद(मार्द)वानि च तानि तु ।। २५६ ।।

मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ।

त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ।। २५७ ।।

प्रियाभैरप्रियैर्वाक्यैर्विलोभ्यच्छलनाच्छलम् ।

अन्ये त्वाहुश्छलं किञ्चित्कार्यमुद्दिश्य कस्यचित् ।। २५८ ।।

उदीर्यते यद्वचनं वञ्चनाहास्यरोषकृत् ।

वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ।। २५९ ।।

अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं मतम् ।

गण्डं प्रस्तुतसंबन्धि भिन्नार्थं सत्वरं वचः ।। २६० ।।

व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ।

प्रहेलिकैव हास्येन युक्ता भवति नालिका ।। २६१ ।।

असत्प्रलापो यद्वाक्यमसंबद्धं तथोत्तरम् ।

अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः ।। २६२ ।।

व्याहारो यत्परस्यार्थे हास्यक्षोभकरं वचः ।

दोषा गुणा गुणा दोषा यत्र स्युर्मृद(र्माद)वं हि तत् ।। २६३ ।।

भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् ।

भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ।। २६४ ।।

अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ ।

अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ।। २६५ ।।

तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः ।

एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ।।

आश्रित्य कञ्चन जनं संकीर्णमिति तद्विदुः ।। २६६ ।।

वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।

तत्पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ।। २६७ ।।

विकृतं तु विदुर्यत्र षण्ढकञ्चुकितापसाः ।

भुजङ्गचारणभटप्रभृतेर्वेषवाग्युताः ।। २६८ ।।

नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।

प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ।। २६९ ।।

स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा ।

नवानुरागा कन्यात्र नायिका नृपवंशजा ।। २७० ।।

सम्प्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः ।

देवी भवेत्पुनर्ज्येष्ठा प्रगल्भा नृपवंशजा ।। २७१ ।।

पदे पदे मानवती तद्वंशः सङ्गमो द्वयोः ।

वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः सन्धयः पुनः ।। २७२ ।।

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।

त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ।। २७३ ।।

प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलंकृता ।

नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी ।। २७४ ।।

हीना गर्भविमर्शाभ्यां पञ्चषड्योषिदन्विता ।

कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ।। २७५ ।।

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।

न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ।। २७६ ।।

अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ।

नाट्यरासकमेकाङ्कं बहुताललयस्थिति ।। २७७ ।।

उदात्तनायकं तद्वत्पीठमर्दोपनायकम् ।

हास्योऽङ्ग्यत्र सशृङ्गारो नारी वासकसज्जिका ।। २७८ ।।

मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ।

केचित्प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ।। २७९ ।।

प्रस्थानं नायको दासो हीनः स्यादुपनायकः ।

दासी च नायिका वृत्तिः कैशिकी भारती तथा ।। २८० ।।

सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।

अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ।। २८१ ।।

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।

शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणै रसैः ।। २८२ ।।

उल्लाप्यं बहुसंग्राममस्रगीतमनोहरम् ।

चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ।। २८३ ।।

काव्यमारभटीहीनमेकाङ्गं हास्यसंकुलम् ।

खण्डमात्राद्विपदिकाभग्नतालैरलंकृतम् ।। २८४ ।।

वर्णमात्राछड्डणिकायुतं शृङ्गारभाषितम् ।

नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ।। २८५ ।।

गर्भावमर्शरहितं प्रेङ्खणं हीननायकम् ।

असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ।। २८६ ।।

नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।

नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ।। २८७ ।।

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।

भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतम् ।। २८८ ।।

असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम् ।

श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ।। २८९ ।।

उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।

इह प्रतिमुखं सन्धिमपि केचित्प्रचक्षते ।। २९० ।।

संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।

पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ।। २९१ ।।

भवेयुः परसंरोधच्छलसंग्रामविद्रवाः ।

न तत्र वृत्तिर्भवति भारती न च कैशिकी ।। २९२ ।।

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ।

प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ।। २९३ ।।

भारतीवृत्तिवहुलं स्त्रीतिशब्देन संकुलम् ।

मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ।। २९४ ।।

श्रीरासीना श्रीगदिते गायेत्किंचित्पठेदपि ।

एकाङ्को भारतीप्राय इति केचित्प्रचक्षते ।। २९५ ।।

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ।

अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ।। २९६ ।।

वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः ।

सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ।। २९७ ।।

आशंसातर्कसंदेहतापोद्वेगप्रसक्तयः ।

प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ।। २९८ ।।

विलासालस्यबाष्पाणि प्रहर्षाश्वासमूढताः ।

साधनानुगमोच्छ्वासविस्मयप्राप्तयस्तथा ।। २९९ ।।

लाभविस्मृतिसंफेटा वैशारद्यं प्रबोधनम् ।

चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ।। ३०० ।।

शृङ्गारबहुलेकाङ्का दशलास्याङ्गसंयुता ।

विदूषकविटाभ्यां च पीठमर्देन भूषिता ।। ३०१ ।।

हीना गर्भविमर्शाभ्यां संधिभ्यां हीननायका ।

स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ।। ३०२ ।।

दुर्मल्ली चतुरङ्का स्यात् कैशिकीभारतीयुता ।

अगर्भा नागरनरा न्यूननायकभूषिता ।। ३०३ ।।

त्रिनालिः प्रथमोऽङ्कास्यां विटक्रीडामयो भवेत् ।

पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ।। ३०४ ।।

षण्णालिकस्तृतीयस्तु पीठमर्दविलासवान् ।

चतुर्थो दशनालिः स्यादङ्कः क्रीडितनागरः ।। ३०५ ।।

नाटिकैव प्रकरणी सार्थवाहादिनायका ।

समानवंशजा नेतुर्भवेद्यत्र च नायिका ।। ३०६ ।।

हल्लीश एक एवाङ्कः सप्ताष्टौ दश वा स्त्रियः ।

वागुदात्तैकपुरुषः कै(कौ)शिकीवृत्तिरुज्ज्वला ।

मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः ।। ३०७ ।।

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।

कै(कौ)शिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ।। ३०८ ।।

उदात्तनायिका मन्दनायकात्राङ्गसप्तकम् ।

उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।। ३०९ ।।

समर्पणं निवृत्तिश्च संहार इति सप्तमः ।

उपन्यासः प्रसङ्गेन भवेत्कार्यस्य कीर्तनम् ।। ३१० ।।

निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ।

भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यानं तु साध्वसम् ।। ३११ ।।

सोपालम्भवचः कोपपीडयेह समर्पणम् ।

निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ।। ३१२ ।।

संहार इति च प्राहुर्यत्कार्यस्य समापनम् ।

श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ।। ३१३ ।।

छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम् ।

द्वाभ्यां तु युग्मकं सांदानतिकं त्रिभिरिष्यते ।। ३१४ ।।

कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ।

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।। ३१५ ।।

सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।

एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।। ३१६ ।।

शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ।

अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।। ३१७ ।।

इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ।

चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत् ।। ३१८ ।।

आदौ नमस्क्रियाशीर्वा वस्तुनिर्देश एव वा ।

क्वचिन्निन्दा खलादीनां सतां च गुणकीर्तनम् ।। ३१९ ।।

एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।। ३२० ।।

नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ।

सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।। ३२१ ।।

संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः ।

प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः ।। ३२२ ।।

संभोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ।

रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।। ३२३ ।।

वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह ।

कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।। ३२४ ।।

नामास्य सर्गोपादेयकथया सर्गनाम तु ।

अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः ।। ३२५ ।।

प्राकृतैर्निर्मिते तस्मिन्सर्गा आश्वाससंज्ञकाः ।

छन्दसा स्कन्धकेनैतत्क्वचिद्गलितकैरपि ।। ३२६ ।।

अपभ्रंशनिबद्धेऽस्मिन् सर्गाः कुडवकाभिधाः ।

तथाऽपभ्रंशयोग्यानि च्छन्दांसि विविधान्यपि ।। ३२७ ।।

भाषाविभाषानियमात्काव्यं सर्गसमुच्झितम् ।

एकार्थप्रवणैः पद्यैः संधिसामग्र्यवर्जितम् ।। ३२८ ।।

खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च ।

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।। ३२९ ।।

व्रज्याक्रमेण रचितः स एवातिमनोरमः ।

वृत्तगन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।। ३३० ।।

भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ।

आद्यं समासरहितं वृत्तभागयुतं परम् ।। ३३१ ।।

अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम् ।

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।। ३३२ ।।

क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।

आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम् ।। ३३३ ।।

आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम् ।

अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित् ।। ३३४ ।।

कथांशानां व्यवच्छेद आश्वास इति बध्यते ।

आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ।। ३३५ ।।

अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ।

गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।। ३३६ ।।

गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ।

करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ।। ३३७ ।।

## सप्तमः परिच्छेदः

रसापकर्षका दोषास्ते पुनः पञ्चधा मताः ।

पदे तदंशे वाक्येऽर्थे संभवन्ति रसेऽपि यत् ।। १ ।।

दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।

ग्राम्याप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ।। २ ।।

अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।

अविमृष्टविधेयांशभावश्च पदवाक्ययोः ।। ३ ।।

दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदे परे ।

निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ।। ४ ।।

'वर्णानां प्रतिकूलत्वं, लुप्ताऽऽहतविसर्गते ।

अधिकन्यूनकथितपदता हतवृत्तता ।। ५ ।।

पतत्प्रकर्षता, सन्धौ विश्लेषाश्लीलकष्टताः ।

अर्धान्तरैकपदता समाप्तपुनरात्तता ।। ६ ।।

अभवन्मतसम्बन्धाक्रमामतपरार्थताः ।

वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा ।। ७ ।।

त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः ।

संकीर्णता गर्भिततता दोषाः स्युर्वाक्यमात्रगाः ।। ८ ।।'

अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।

अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ।। ९ ।।

सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।

साकाङ्क्षता सहचरभिन्नताऽस्थानयुक्तता ।। १० ।।

अविशेषे विशेषश्चानियमे नियमस्तथा ।

तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा ।। ११ ।।

निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्तिताः ।

रसस्योक्तिः स्वशब्देन स्थायिसंचारिणोरपि ।। १२ ।।

परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ।

आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ।। १३ ।।

अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ।

अङ्गिनोऽननुसंधानमनङ्गस्य च कीर्तनम् ।। १४ ।।

अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्ययः ।

अर्थानौचित्यमन्यच्च दोषा रसगता मताः ।। १५ ।।

(एभ्यः पृथगलङ्कारदोषाणां नैव संभवः ।।)

वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।

रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ।। १६ ।।

सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः ।

स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ।। १७ ।।

गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ।

स्वयं वापि परामर्शे कथितं च पदं पुनः ।। १८ ।।

विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ।। १९ ।।
अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ।
सन्दिग्धत्वं तथा व्याजस्तुतिपर्यवसायि चेत् ।। २० ।।
वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि ।
कष्टत्वं दुःश्रवत्वं वा ग्राम्यत्वमधमोक्तिषु ।। २१ ।।
निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ।
कवीनां समये ख्याते गुणः ख्यातविरुद्धता ।। २२ ।।
मालिन्यं व्योम्नि पापे, यशसि धवलता वर्ण्यते हासकीर्त्यो-
रक्तौ च क्रोधरागौ; सरिदुदधिगतं पङ्कजेन्दीवरादि ।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः ।। २२ ।।
पादाघातादशोको विकसति बकुलो योषितामास्यमद्यै-
र्यूनामङ्गेषु हाराः, स्फुटति च हृदयं विप्रयोगस्य तापैः ।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ।। २४ ।।
अह्न्यम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात् ।
न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत्कविसमयगतं सत्कवीनां प्रबन्धे ।। २५ ।।
धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ।

आरूढत्वादिबोधाय प्रयोक्तव्याः स्थिता अमी ।। २६ ।।

उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः ।

क्वचिन्न दोषो न गुणः गुणः क्वाऽप्यधिकं पदम् ।। २७ ।।

समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित् ।

गर्भितत्वं गुणः क्वापि पतत्प्रकर्षता तथा ।। २८ ।।

क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः ।

अनुभावविभावाभ्यां रचना यत्र नोचिता ।। २९ ।।

सञ्चार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ।

विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ।। ३० ।।

भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ।

अनुकारे च सर्वेषां दोषाणां नैव दोषता ।। ३१ ।।

अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।

अदेषता च गुणता ज्ञेया चानुभयात्मता ।। ३२ ।।

## अष्टमः परिच्छेदः

रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा ।

गुणाः माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा ।। १ ।।

चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।

संभोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ।। २ ।।

मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान्विना ।

रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ।। ३ ।।

अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।

ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ।। ४ ।।

वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ।

वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ।। ५ ।।

उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह ।

शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ।। ६ ।।

तथा समासो बहुलो घटनौद्धत्यशालिनी ।

चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।। ७ ।।

स प्रसादः समस्तेषु रसेषु रचनासु च ।

शब्दास्तद्व्यञ्जका अर्थबोधकाः श्रुतिमात्रतः ।। ८ ।।

एषां शब्दगुणत्वं च गुणवृत्त्योच्यते बुधैः ।

श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः ।। ९ ।।

गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ।

माधुर्यव्यञ्जकत्वं यदसमासस्य दर्शितम् ।। १० ।।

पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ।

अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः ।। ११ ।।

अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ।

ग्राम्यदुःश्रवतात्यागात्कान्तिश्च सुकुमारता ।। १२ ।।

क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी ।

अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् ।। १३ ।।

ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता ।

तदभावस्य दोषत्वात्स्वीकृता अर्थगा गुणाः ।। १४ ।।

अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः ।

रसध्वनिगुणीभूतव्यङ्ग्यानां कान्तिनामकः ।। १५ ।।

श्लेषो विचित्रतामात्रमदोषः समता परम् ।

न गुणत्वं समाधेश्च तेन नार्थगुणाः पृथक् ।। १६ ।।

## नवमः परिच्छेदः

पदसंघटना रीतिरङ्गसंस्थाविशेषवत् ।

उपकर्त्री रसादीनां सा पुनः स्याच्चतुर्विधा ।। १ ।।

वैदर्भी चाथ गौडी च पाञ्चाली लाटिका तथा ।

माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।। २ ।।

अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।

ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ।। ३ ।।

समासबहुला गौडी वर्णैः शेषैः पुनर्द्वयोः ।

समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ।। ४ ।।

लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता ।

क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः ।। ५ ।।

## दशमः परिच्छेदः

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।

रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ।। १ ।।

आपाततो यदर्थस्य पौनरुक्त्येन भासनम् ।

पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ।। २ ।।

अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।

छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ।। ३ ।।

अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा ।

एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ।। ४ ।।

उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके ।

सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ।। ५ ।।

व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु ।

आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ।। ६ ।।

शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः ।

लाटानुप्रास इत्युक्तोऽनुप्रासः पञ्चधा ततः ।। ७ ।।

सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।

क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ।। ८ ।।

अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि ।

अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ।। ९ ।।

शब्दैरेकविधैरेव भाषासु विविधास्वपि ।

वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते ।। १० ।।

श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ।

वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ।। ११ ।।

श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ।

पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ।। १२ ।।

पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।

रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ।। १३ ।।

उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ।

साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ।। १४ ।।

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।

उपमेयं चोपमानं भवेद्वाच्यमियं पुनः ।। १५ ।।

श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ।

आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ।। १६ ।।

द्वे तद्धिते समासेऽथ वाक्ये पूर्णा षडेव तत् ।

लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ।। १७ ।।

त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् ।

पूर्णावद्धर्मलोपे सा विना श्रौतीं तु तद्धिते ।। १८ ।।

आधारकर्मविहिते द्विविधे च क्यचि क्यङि ।

कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ।। १९ ।।

उपमानानुपादाने द्विधा वाक्यसमासयोः ।

औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ।। २० ।।

द्विधा समासे वाक्ये च लोपे धर्मोपमानयोः ।

क्विप्समासगता द्वेधा धर्मेवादिविलोपने ।। २१ ।।

उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि ।

धर्मोपमेयलोपेऽन्या त्रिलोपे च समासगा ।। २२ ।।

तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः ।

एकरूपः क्वचित्क्वापि भिन्नः साधारणो गुणः ।। २३ ।।

भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ।

एकदेशविवर्तिन्युपमा वाच्यत्वगम्यत्वे ।। २४ ।।

भवेतां यत्र साम्यस्य कथिता रशनोपमा ।

यथोर्ध्वमुपमेयस्य यदि स्यादुपमानता ।। २५ ।।

मालोपमा यदेकस्योपमानं बहु दृश्यते ।

उपमानोपमेयत्वमेकस्यैव त्वनन्वयः ।। २६ ।।

पर्यायेण द्वयोरेतदुपमेयोपमा मता ।

सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ।। २७ ।।

रूपकं रूपितारोपो विषये निरपह्नवे ।

तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ।। २८ ।।

यत्र कस्यचिदारोपः परारोपणकारणम् ।

तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ।। २९ ।।

प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ।

अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत् ।। ३० ।।

समस्तवस्तुविषयमेकदेशविवर्ति च ।

आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम् ।। ३१ ।।

यत्र कस्यचिदार्थत्वमेकदेशविवर्ति तत् ।

निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ।। ३२ ।।

मालाकेवलरूपत्वात् तेनाष्टौ रूपके भिदाः ।

दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके ।। ३३ ।।

अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत् ।

विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ॥ ३४ ॥

परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ।

संदेहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ॥ ३५ ॥

शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा ।

साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः ॥ ३६ ॥

क्वचिद्भेदाद् ग्रहीतृणां विषयाणां तथा क्वचित् ।

एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥ ३७ ॥

प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः ।

गोपनीयं कमप्यर्थं द्योतयित्वां कथञ्चन ॥ ३८ ॥

यदि श्लेषेणान्यथा वान्यथयेत्साप्यपह्नुतिः ।

अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ॥ ३९ ॥

भवेत्संभावनोत्प्रेक्षा प्रकृतस्य परात्मना ।

वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥ ४० ॥

वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।

जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥ ४१ ॥

तदष्टधापि प्रत्येकं भावाभावाभिमानतः ।

गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥ ४२ ॥

द्वात्रिंशद्विधतां यान्ति तत्र वाच्याभिदाः पुनः ।

विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः ॥ ४३ ॥

उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः ।

प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः ॥ ४४ ॥

उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा ।

अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं भजेत् ।। ४५ ।।

सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ।

भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।। ४६ ।।

पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः ।

पदार्थानां प्रस्तुनानामन्येषां वा यदा भवेत् ।। ४७ ।।

एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ।

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।। ४८ ।।

अथ कारणमेकं स्यादनेकासु क्रियासु चेत् ।

प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः ।। ४९ ।।

एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ।

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।। ५० ।।

सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित् ।

यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ।। ५१ ।।

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।

व्यतिरेकः एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा ।। ५२ ।।

चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः ।

आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा ।। ५३ ।।

प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः ।

सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ।। ५४ ।।

सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत् ।

विनोक्तिर्यद्विनान्येन नासाध्वन्यदसाधु वा ।। ५५ ।।

समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ।

व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ।। ५६ ।।

उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः ।

शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।। ५७ ।।

क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः ।

कार्यान्निमित्तं कार्यं च हेतोरथ समात्समम् ।। ५८ ।।

अप्रस्तुतात्प्रस्तुतं चेद् गम्यते पञ्चधा ततः ।

अप्रस्तुतप्रशंसा स्यादुक्ता व्याजस्तुतिः पुनः ।। ५९ ।।

निन्दास्तुतिभ्यां वाच्यायां गम्यत्वे स्तुतिनिन्दयोः ।

पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ।। ६० ।।

सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।

कार्यं च कारणेनेदं कार्येण च समर्थ्यते ।। ६१ ।।

साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ।। ६२ ।।

अनुमानं तु विच्छित्या ज्ञानं साध्यस्य साधनात् ।

अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह ।। ६३ ।।

अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ।

वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।। ६४ ।।

निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ।

अनिष्टस्य तथार्थस्य विध्याभासः परो मतः ।। ६५ ।।

विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।

उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्तिता ।। ६६ ।।

सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा ।

जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।। ६७ ।।

क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ।

विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ।। ६८ ।।

कार्यकारणयोर्भिन्नदेशतायामसङ्गतिः ।

गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ।। ६९ ।।

यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः ।

विरूपयोः संघटना या च तद्विषमं मतम् ।। ७० ।।

समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ।

विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ।। ७१ ।।

आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ।

अन्योन्यमुभयोरेकक्रियायाः कारणं मिथः ।। ७२ ।।

यदाधेयमनाधरमेकं चानेकगोचरम् ।

किञ्चित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा ।। ७३ ।।

कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ।

व्याघातः स तु केनापि वस्तु येन यथाकृतम् ।। ७४ ।।

तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ।

सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ।। ७५ ।।

परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ।

तदा कारणमाला स्यात् तन्मालादीपकं पुनः ।। ७६ ।।

धर्मिणामेकधर्मेण सम्बन्धो यद्यथोत्तरम् ।

पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।। ७७ ।।

स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदैकावली द्विधा ।

उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ।। ७८ ।।

यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ।

क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।। ७९ ।।

भवति क्रियते वा चेत्तदा पर्याय इष्यते ।

परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।। ८० ।।

प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।

तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ।। ८१ ।।

परिसंख्योत्तरं प्रश्नस्योत्तरादुन्नयो यदि ।

यच्चासकृदसंभाव्यं सत्यपि प्रश्न उत्तरम् ।। ८२ ।।

दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ।

विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयु(य)तः ।। ८३ ।।

समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।

खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ।। ८४ ।।

गुणौ क्रिये वा युगपत्स्यातां यद्वा गुणक्रिये ।

समाधिः सुकरे कार्यं दैवाद्वस्त्वन्तरागमात् ।। ८५ ।।

प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।

तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ।। ८६ ।।

प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।

निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ।। ८७ ।।

उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ।

कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ।। ८८ ।।

मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा ।

सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ।। ८९ ।।

तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ।

तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ।। ९० ।।

संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।

कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ।। ९१ ।।

व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ।

स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।। ९२ ।।

अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।

यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ।। ९३ ।।

लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते ।

यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ।। ९४ ।।

रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।

गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ।। ९५ ।।

रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।

भावस्य चोदये संधौ मिश्रत्वे च तदाख्यकाः ।। ९६ ।।

यद्येत एवालङ्काराः परस्परविमिश्रिताः ।

तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा ।। ९७ ।।

'मिथोऽनपेक्षमेतेषां स्थितिः संसृष्टिरुच्यते ।

अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ ।

संदिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ।। ९८ ।।

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-

श्रीविश्वनाथकविराजकृतं प्रबन्धम् ।

साहित्यदर्पणममुं सुधियो विलोक्य

साहित्यतत्त्वमखिलं सुखमेव वित्त ।। ९९ ।।

यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्गमलङ्करोति ।

तावन्मनः संमदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके ।। १०० ।।

---